पाञ्चनद-संस्कृतसाहित्यसम्मेलनस्यामृतसरसीये
वार्षिकेऽधिवेशने
सभापतीनां श्री चारुदेवशास्त्रिणाम्

# आभाषणम्

पाञ्चनद-संस्कृतसाहित्यसम्मेलनस्यामृतसरसीये
वार्षिकेऽधिवेशने
सभापतीनां श्री चारुदेवशास्त्रिणाम्

# आभाषणम्

यं ब्रह्मा वरुणेन्द्ररुद्र मरुतः स्तुन्वन्ति दिव्यैः स्तवै-
र्वेदैः साङ्गपदक्रमोपनिषदै गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥

अयि महाभागाः !

संस्कृतसाहित्य सम्मेलनमिदमिति बह्वत्र विमर्ष्टव्यमस्ति तच्चानल्पमनेहसमपेक्षते विद्वत्साहायकं चेत्यल्पमेवासहाया विमक्ष्यामिः। पुण्यपत्तनेऽस्मिन्नमृतसरसे समवायः संस्कृत विदुषां संस्कृते च प्रणयवतामिति परः प्रहर्षः। सम्प्रति दुःस्मरः स्वप्नायितः स कालो यत्र ग्रामे ग्रामे कालापकं काठकं चाधीयते स्म। यत्र सूतस्य वैयाकरणस्य च शब्दसाधुत्वे प्रावृत विवादः। नचिरातीतः श्रीभोजसमयोपि मर्मसु नः स्पृशतीव स्मर्यमाणः, यत्र तन्तुवाय अपि कविकर्मणि कुशलाः कवयामि वयामि यामीत्यभूवन्वक्तारः। करालेऽस्मिन्कलिकाले सर्वमधरोत्तरमभूत्। हन्त विपर्यासं गतो जागत्कः क्रमः सर्वः। विरलमेव साम्प्रतं सामगान पुण्यो वेदध्वनिर्मूर्छति श्रवणयोः। आश्चर्यमिव बटूनां बद्धब्रह्माञ्जलीनां स्वाध्याय मधीयानानां श्रूयते पावनो ध्वनिः। क्वचिदेव शास्त्रार्थप्रवृत्तानां विप्रवदमानानां विप्राण विचरति कलकलः काष्ठाः।

यत्सत्यं निःस्वाध्यायानि श्मशानतुल्यानि प्रायाद् द्विजन्मनां सद्मानि बीभत्सदर्शनानि न हि क्वचिन्निगमेषु पत्तनेषु ग्रामेषु खर्वटेषु वा रामायणं वा भारतं वा वाच्यते, पुराणं वा प्रक्रियते। अस्तं गता शास्त्रव्यसिनता काव्यरसिकता च। समुत्सादं गताः शास्त्रविषयः पा म्पयगिताः समाचाराश्च। विलयं गताऽऽस्तिक्यबुद्धिर्भक्तिश्च। सेयं विषमा स्थिति कथङ्कारं समीक्रियेतेति चिन्ताऽऽस्कन्दति चेतः। अज्ञानान्धतामिस्रेण सम्मीलितेन्द्रिया व कदाऽऽत्मनि जागरिष्यामः, कदा च दुः समाधानामिमामवस्थां समाधास्यामः। किमुत्पत्स्य कश्चिदपरस्तुतातो यो भूयोप्यु उद्धरिष्यति वेदान्ग्रन्थमात्रे व्यवस्थितान् ? अ जनिष्यतेऽपरो ऽप्रतिभटो वादिभयङ्करः श्री शङ्करो यो दिव्येन वाक्सुधाधारासारे संजीवयिष्यति नोऽवसन्नान्व्युत्क्रान्तजीवितान् ?

अयि प्रियाः संस्कृतज्ञाः ! किं न चेतयध्वे भवत्सु पूर्वषां गुरूणां सम्प्रदायः स्थित स गोपायनीयः, वृद्धिं च नेयः। अद्याप्यल्पे भवन्तः संस्कृतं शीलयन्ति, तन्निबद्धाश्च विद कामयन्ते, तद्गतांश्चाचारान्परिगृह्णन्ति इति धन्या यूयमिति समुपजोषं ब्रूमः। जानेऽत्रभवन् परेण मनोवसादेन सीदन्ति, कुच्छ्रिणो वयमुपेक्षिता लोकेन लोकेशेन च न्यक्कारस्य कस्याप्य स्पदं भूता इत्यात्मानं गर्हमाणा इव विलोक्यन्ते। सेयमात्मगर्हा मनोवसादकृता युज्यतेऽत्रभवत्सु लोकस्थितिं जानत्सु। न ह्यद्यत्वे भारतेऽस्मिन्वेदानुगो भूपतिः, राज्यतन

च लोकतन्त्रम्, लोकश्च नैकविधः समुदयो नानारुचिर्नानामतिश्च । तेन स यदि मा स्म क्षुधा सदद्राष्ट्रे स्नातको द्विज इति मानवीमनुशिष्टिं प्रबोधनां वा नाद्रियते तत् का नश्चित्रीया । इदमेव तु चित्रतमं यद्वयं भिक्षाकतामिव गता मानं जहीमः । अस्ति नः कश्चिद् बुद्धिभेद ऋतिङ्करः । वयं वागन्तरविदो विषयान्तरज्ञांश्चापेक्ष्यात्मानं जघन्याँल्लघीयसो वा गणयामः, धनिकान्वाणिजाँल्लोके समादरमश्नुवानान् निशाम्य वयं न तथा लोकस्याभ्यर्चिता इत्याकलय्य दुःख्यामः । किंकृतोयं भवतां हृदि परप्रकर्षोन्मेषोऽनात्मनीन इति पृच्छा न दुरुत्तरा । यत्रात्मनि संभावनाऽऽत्मगरिमभावना वा नास्ति तत्र परस्यैव ज्यायस्त्वं प्रतिच्छन्दितं भवतीति किमत्र चित्रम्, तेन च या जायते ज्यानिस्तां केन मानदण्डेन मिमीमहे । केन योगेनात्मनि गौरवं पुनराहितं स्यादिति समस्य विन्यस्यामि । पूर्वा पूर्वतरैर्जुष्टा कल्याणी बुद्धिर्या यदि राजन् अर्थानामीशिषे त्वं वयमपि वाचामीश्महे यावदर्थम् इत्येवं हरिणाभ्युक्ता साऽऽस्थेया । सारस्वते सद्मनि स्थितास्तत्र तत्र वाचां गुम्फेषु रंरम्यमाणा यमानन्दातिरेकमश्नुमहे स बाह्येषु नीरसेषु विरसेषु सरसाभासेष्वर्थेष्वनर्थहेतुषु कुतो लभ्यः, कुतस्तरां वा तद्वत्सु वराकेष्वनर्थानुविद्धेषु । सेयं धीर् यद्युन्मिषेदनपायिनी, नूनं विभव विरहेपि विभविष्यामः, पराभवं च परिहास्यामः, शिरः समुन्नमय्य च परिक्रमिष्यामः, कृपणं चासंस्कृतज्ञं जनमनुक्रोक्ष्यामः । परं रिक्ते गौरवं नोदेतीति सार्वलौकिकम् । पूर्णता गौरवाय भवतीति लोकशास्त्रोभयविदः । तेन पूर्णतायै कर्तव्योऽभियोगः । न केवलं यत्किञ्चिद्गुरुमुखाच्छ्रुतं तदेव रक्षणीयमश्रुतमपि बह्वर्थान्तरमादेयम् । अधीतस्य प्रणाशनमुपपातकेन सममिति स्मरन्ति महर्षयो मन्वादयः । तत्र कियन्तो वयमुपपातकिन इति स्वयमेव विभावनीयम् । आस्तां तावत्साहित्ये नदीष्णता दर्शनेषु लब्धवर्णता पाणिनीये वा प्रवीणता, रामायणभारतयोः पुराणेषु चाप्यास्माकीना प्रतिहन्यते गतिरिति दूरापेता पूर्णता, तन्निबन्धना च गुरुता । यां कामपि परीक्षामुत्तीर्य कृतकृत्यतां कलयन्ति प्रायशश्छात्राः, त एव चेत्थम्भूतास्त्वरितं प्रवक्तारो भवन्ति यथा तथा च शास्त्राण्यर्थापयन्तः पाठशालेषु वाचस्पत्यं वितन्वन्तो विमोहयन्ति मुग्धं जनम् । इदं च संस्कृतज्ञ समष्टिमधिकृत्य सामान्यतो ब्रूम इति सापवादमस्मद्वचः । नेदं वाचि विचक्षणान् सारस्वतसर्वस्वज्ञान्महामहिम्नो व्यक्तिविशेषान् गोचरयति । मान्यास्ते विरला विरलतराश्च भवन्त्यहरहरित्येवाभिप्रेमोनुशोचामश्च । सेयमनर्थपरम्परा निर्ऋतिरिव नो जिघत्सति । यदि नाम संस्कृते संस्कृतसाहित्ये च नोऽकृतकोनुरागस्तर्हि विहाय विषयान्तरप्रसङ्गं संस्कृतसाहित्यपरिशीलनप्रसितैरस्माभिर्भवितव्यमात्मभविकं बिभावयिषद्भिः ।

इह समवेता वयं संस्कृतं लोके प्रचरिततरमिच्छामः । तत्कृते च यत्नमपि विधित्सामः । आ मा यन्तु ब्रह्मचारिण इत्यौपनिषदमार्षं वचः स्मरन्तो वयं ततस्ततो विद्याकामना विद्ययाऽऽर्थिनः समुपयन्तु नः कुमारा अस्मदधीतेश्चारिताध्ययिति नित्य-

मर्थयामहे छात्रोपश्लेषम् । इदं सदृशं नः । इदं तु विसदृशं यत्स्वमपत्यं संस्कृते नाभिमुखीकुर्मः, स्वात्मजेष्वेकतममपि संस्कृतं नाध्यापयामः, कन्यका अपि न तत्र प्रवर्तयामः । मन्ये स्वयं शास्त्रानन्दं काव्यरसं वानुभवन्तः स्वेभ्योपि न तं संविभक्तुमिच्छामः । अहो मात्सर्यम् । अहो अभ्यसूया । इयं हि नः परा कुत्सा । यदि नाम संस्कृतं सुधामितरेऽबन्धवोऽसंस्तुता वा पायनीयास्तर्हि किमिदं स्वेषु विषायते यत्ते तपस्विनोऽनेन विना क्रियन्ते । यदि च संस्कृताध्ययनं सम्प्रति नाभ्युदयिकमिति भवतां मनीषा तर्हि कया युक्त्या परात्मजान संस्कृताध्ययने प्रेरयितुमुत्सहेरन्भवन्तः । किमिदं परातिसन्धानं न भविष्यति ? अत्रानभिक्रुध्य शान्तेन चेतसा प्रतिवचो देयम् । किं च यत्संस्कृतमाजीवन्तो भवन्तो लोकयात्रां निर्वहन्ति, यत्र च परं प्रेमाणमपदिशन्ति तस्यैषाऽवहेलना न भवति किम् ? काममात्मीयासु प्रजासु काश्चन द्वित्रास्त्रिचतुरा वा वहिरङ्गासु वृत्तिवैपुल्यकरीष्वधुनातनीषु विद्यासु प्रवर्तयितुमर्हन्ति सन्तः, तास्वेकतमा त्ववश्यं संस्कृताधीत्यां प्रेर्या व्यापार्या चेति कथं नोदेत्यवदाता मनीषा । लोको हि ह्रस्वं पश्यति, न दीर्घम्, अपरं पश्यति न परमिति किमेतावता संस्कृतज्ञैरपि तथा दर्शनीयं श्रेयश्च निश्चितं हेयम् । हिताहितयोरादित्साजिहासे यदि तस्य कृतिनो न स्यातां कस्यान्यस्याधन्यस्यानाघ्रातशास्त्रार्थस्य ते संभाव्येयाताम् । बाढं सुतैर्वृत्तिरर्जनीया निर्वेशश्च भूयानुपचयनीय इति ते विषयान्तराण्यधिजिगांसन्ते संस्कृतवर्जं चानेकां विद्यामध्याप्यन्ते, सुताभिरपि किं वृत्त्यर्थं द्रविणमन्वेषणीयं यत्ता अपि संस्कृतं न ग्राह्यन्ते विषयान्तरेषु च श्रमं कार्यन्ते । अहो विनष्टिः, अहो पातित्यम्, अहो अतटप्रपातः ।

भृतकाध्यापकत्वं हि निन्दन्ति शास्त्राणि भृतकाध्यापितत्वं च । सम्प्रति विषमस्था वयं भृतिभुक्त्वमूरीकुर्म इति परा परायत्तता नः । न चैतावता पातित्यान्निर्मोक्षः । अयं हि पाप्मा येन नित्यं न्यञ्चामः । कथमस्मादुद्धारो नः स्यात् । काऽत्र निष्कृतिः स्यात् । अहं तु मन्ये एकैवात्र निष्कृतिः । अर्थिनः समर्थाः शुश्रूषवोऽनसूयका ये केचन शुल्कादिदानेऽक्षमाः पाठशालाश्रेणिष्वलब्धसन्निवेशा अस्मानुपसीदेयुस्तेऽनुग्राह्या इत्यात्मीयतामुपनेतव्या यत्नेन चाभिविनेयाः । विद्यार्थिभ्यो ह्यर्था देया यदि तच्छक्यक्रियं स्यान्न तु ततः किञ्चनादेयमिति मतमभिमतं नो स्तु ।

यदीच्छामः संस्कृतं लोके प्रचरेत्तरां प्रचीयेत च तर्हि निगमागमप्रधानानि विद्यामन्दिराणि प्रस्थाप्यन्ताम्, यत्राशुतोषाः सन्तोषधना अलोलुपा अगृह्यमाणकारणाः शास्त्रचिन्तकाः शेवधयो विद्यानां निधयो गुणानां सुकृतिनः कृतिन आचार्यकमाचरन्तु । यदि नाम तादृशा न सुलभास्तर्हि राज्यसाहाय्येन श्रेष्ठिजनविश्राणितेन वित्तेन च वृत्त्या कयापि संयोज्य नियोज्या विपश्चितः । अद्यत्वे विपरिवृत्ता राज्यव्यवस्था, येनाल्पो वा महान् वा शिष्टो वा प्राकृतो वा स्वेनार्जितेन राज्यस्योप-

कुरुते, अभ्यर्हति चान्तराऽन्तरा तत्र तत्र व्यवसितेषु राज्याधिकृतैः करिष्यमाणं साहायकम् । न च बलवत् प्रचोदितास्ते मार्गितमर्थं प्रत्याख्यातुमीशते, समुदायश्चेत्तत्र प्रचोदयिता । परिवृत्तेषु लोकवृत्तान्तेषु शान्तैरनुद्वेगैस्तूष्णीकैरपि विप्रैः सङ्घर्ष एषणीयः । नेदानी-मुदास्थितैरात्मारामैर्लोकिकोर्थः कश्चिच्छक्यो निर्वर्तयितुम् ।

पञ्चनदेस्मिञ्जनपदे नैकापि संस्कृतपत्रिका प्रचरति मासिकी वार्षिकी वा । किमिदं नो ह्लेपयति नः । पत्त्रिका हि बहूपकुर्वन्ति लोकस्य तत्र तत्रार्थे संशीतीर्वारयन्त्यो विवादं शमयन्त्य ऐकमत्यं च संस्थापयन्त्यः । परं तत्रार्थे विनियोज्योर्थराशिः कुत आप्स्यते, किं कश्चिन्मठाधीशो महानिति व्यपदेशभाग् देवस्वे वाऽधिकृतो देवलः सम्प्रार्थ्यः, सम्प्रार्थितोप्यसौ कियद् दास्यति, अनल्पाः स्वा दुर्दाना भवन्तीति न स्मर्यते किम् । बाढं स्मर्यते । न ब्रूमो मठाधीशा अर्थपतयो वान्येऽर्थमभ्यर्थ्याः, संस्कृतज्ञाः संस्कृत-प्रणयिन एवोपसृप्याः । यदि ते समायां समायां रूप्यकपञ्चकं रूप्यकाष्टकं वा पत्रिका-मुद्रणप्रकाशनाभ्यां नार्पयितुं क्षमन्ते तर्हि संस्कृतप्रणयिनो वयमिति मिथ्याभिलापः । संस्कृतं प्रचिचारयिषाम इति कथाऽस्तमेतु । नार्थो वाग्विग्लापनेनेति विरम्यतां विरावेण ।

इदं चापरं सुविधानं समैरपि संस्कृतज्ञैः संस्कृतप्रचारकामैः । वृत्त्यर्जनातिशिष्टे समये सायं वा नक्तं वा रामायणं वा महाभारतं वा पुराणं वा प्रकरणीयम् । यदि ग्रामे ग्रामे पुण्या इमा कृतयो नैयत्येनानन्तरायमा समाप्तेर्वाच्येरन् कियती नोर्थसिद्धिः स्यादिति क्षणं चिन्तनीयम् । न केवलं तत्तद्गतानि रामादिचरितान्येवानायासं विदितानि भविष्यन्ति जनस्यानक्षरस्यापि, संस्कृतशब्दराशिरपि भूयानयत्नगृहीतो भविष्यति, तेन च संस्कारोपि वाचि कश्चनापूर्वो ग्राम्यस्यापि भविष्यति शिष्टस्येवेति किमतोभिलषिततरं स्यात् । सर्वश्चायमभीप्सितोर्थोऽर्थविनियोगेन कनिष्ठेनापि विनैव संसेत्स्यतीत्यभिनन्दिष्यति लोक इमं तद्धिताभियोगम् । इदं च स्मार्यन्ते भवन्त आत्मैव नोनुग्राह्यो न परः कश्चिदिति धियैवात्र शक्यं प्रवर्तितुं नेतरथेति ।

संस्कृतं च यथेष्टं प्रचरेदिति तदैव समर्धिष्यति कामो यदाभ्यर्हन्तो विपश्चिद-पश्चिमा मानमौपयिकं लभेरन् । सम्यग् दानमानाभ्यां प्रोत्साहिता अमी केनाप्यभिनवेन समुत्साहेन प्रवर्त्स्यन्ति संस्कृतप्रचारणायाम् । तेन पञ्चनदीयस्य सम्मेलनस्य स्थायिना मन्त्रिणा या मार्गणा अधिकृतेषु कृतास्ताः सर्वा अपि पूर्तिमविलम्बितामर्हन्तीति न भूयो वचोऽपेक्षते । तत्रापि संस्कृत बोर्ड् इति सदस्यवश्यं प्राचीनपरिपाट्या शास्त्रेषु पठितिनः सदस्यतां लम्भनीया अनिर्धारिता एवेत्येका । सा चेत्पूर्येत सम्प्रत्यनिष्टोऽबोधविजृम्भितः पाठ्यक्रमोस्तमियात् । विश्वविद्यालयसेनेट् इति समज्याया सदस्यनिर्धारणे समुत्तीर्ण-शास्त्रिपरीक्षा अप्यधिक्रियेरन्नित्यपरा । एषाऽपि त्वरितमविचारितं स्वीकार्येति मन्महे । इष्यते तेषामपि विश्वविद्यालयकार्ये निर्वहणेऽङ्गभावः ।

इह भारते वर्षे आ हिमाचलादा च कन्यान्तरीपात् संस्कृतस्य विसृमरतामिच्छन्त; संस्कृतप्रणयिनस्तत्सरलीकरणं तदभ्युपायेष्वन्तःकुर्वन्ति प्रस्तुवन्ति च वाक्ये सन्धेरपनुत्तिं कृदन्तैश्च तिङन्तव्यावृत्तिं प्रायिकीम्। इदमुभयं तावद् विमृशामः क्रमेण। इष्टं नः सरलीकरणम्। न वयं संस्कृतस्य व्याख्यागम्यत्वेऽभिनिवेशिनः। आत्मा तु संस्कृतस्य गोपायितव्य इत्येवाभिलष्यामः। सन्धिर्नाम संस्कृतस्याङ्गमेव न भवति, मर्मस्थानमपि यद्विनाशे तत्स्वरूपप्रणाशः। कामं सन्धिः संस्कृतस्यालङ्कारोप्यस्ति परं कर्णकुण्डले इव सहजो न त्वितरकुण्डलवदाहार्यः। येनास्य सत्त्वासत्त्वे अलंचिकीर्षान्वयव्यतिरेकाभ्यां वक्तृतन्त्रे स्याताम्। अत एव वैदिके लौकिके च वाङ्मये वाक्ये पदानां सन्धेरभावो विरलतमो महता यत्नेनान्वेष्यो भवति। न ब्रूमः संहितासु ब्राह्मणेष्वेव वा विशिष्टानां कृते कृतेषु संहितपदन्यासो नियमेन, न वा काव्यनाटकादिष्वेव तथा, रामायणादिषु चापि स निरपवादो लोकवृत्तपरेषु। शुकसप्तत्यादीविनोदमात्रप्रयोजनाः सरलतमाः कृतीरप्ययं नियामोऽभिव्याप्नोति। यत्र खलु शास्त्रकारः प्रकृतिभावं शास्ति त एव त्रिचतुराः प्रदेशा यत्र सन्धिर्जिहासितव्यो भवति, परं तत्राप्यावृत्तिं सन्धिविरहस्य वैरस्यकरस्य वारयन्ति साहित्याचार्याः। न केवलं वाक्येन्तःपदानां सन्धिमिच्छन्ति पुरा पूर्वे, किन्तर्हि निरपेक्षयोर्वाक्ययोरप्याद्यन्तयोः पदयोस्तं स्पृहयन्ति। तथा च तिष्ठतु दध्यशान त्वं शाकेनेति वाक्यद्वयमपि संहितया समोच्चारयन्ति। अद्यत्वे पुनर्विपरीतं पश्यन्ति विपरीतं च प्रवर्तन्ते। वाक्ये वैकल्पिकः सन्धिः पुरुषविवक्षापेक्ष इति जोघुष्यन्ते। सर्वथाऽनित्यः, क्वचिदास्थीयेत क्वचिन्नेति चातिष्ठन्ते कारिकां चेमां प्रमाणमुदाहरन्ते—

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥ इति।

सत्यमियं कारिका वाक्ये सन्धिं विवक्षानियतमाह, न चेयं शक्याऽन्यथार्थापयितुम्। तथापि कोऽभिसन्धिरस्याः प्रणेतुः। किमेषाऽत्र विषये कामचारमनुजानाति। यद्येवं किमिति पुरातने साहित्ये क्वचिदपि तं कामचारं न संशिश्रियिरे कवयः। अहं तु मन्ये व्यवस्थितविभाषेयं तेनास्या विषयसङ्कोचोनुक्तोपि गम्यते। का नाम संहिता। वर्णानामानन्तर्येणोच्चारणम्। आह च सूत्रकारः—परः संनिकर्षः संहितेति। यच्च शास्त्रेण सन्धिकार्यमुपदिष्टं सर्वं तत् संहितायां सत्यामेव भवति नासंहितायाम्। तथा चाधिकारसूत्रम्—संहितायाम् (६।१।७२) इति। का नाम विवक्षा यामनुरुध्य वाक्ये सन्धिविकल्पः स्यात्। विरामेण विवक्षा, विरम्य विरम्य पदप्रयोगः, संहिताया अभाव इति यावत्। वाक्ये च तस्या अभावः कुतः। इत्थं हि वाक्यं लक्षयन्ति—वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चय इति। तेनावश्यं वाक्ये पदैरासत्तिमद्भिर्भवि-

तव्यं नो चेद् वाक्यमेव न घटेत । असंहितयोच्चार्यमाणानि पदानि परस्परमनन्वितानि भवन्ति संसृष्टार्थपदमेकं वाक्यं पठाम इति प्रतीतिं च वारयन्ति । तेन क‿ प्रसङ्गो वाक्ये विरामस्य, कश्च तन्निघ्नस्य सन्ध्यभावस्य। तस्माद् एक एव सर्वशक्तिः ईश्वरः अस्य लोकस्य धाता विधाता च इति एव तत्त्वमित्यत्र विरामनिबन्धने सन्धिवैधुर्ये वाक्यत्वविपरिलोपः प्रसज्येत, सविरामचिह्नं चेदमेवंविन्यासं स्यात्—एकः। एव सर्वशक्तिः । ईश्वरः । अस्य लोकस्य धाता विधाता च। इति । एव तत्त्वम् । अयमत्र निर्गलितोर्थः—यत्र विरामस्तत्रैव सन्धिविरहो नेतरत्र । सोप्यैच्छिकः । स विरामो वाक्ये न संभवतीति वाक्ये सन्ध्यभावो दुर्लभः । वाक्येषु तु स निसर्गसिद्धोऽनपलाप्यः । यथा सखे, एहि, अनुगृहाणेमं जनम् इत्यत्रानुगृहाणेमं जनमित्येकस्मिन्वाक्ये विरामस्य दूरोत्सारितत्वात सन्धिरपरिहार्यः, इतरत्र सन्धिरस्तु मा वा भूदित्यनादरः । तेन निरस्तपादपे देशे एरण्डोपि द्रुमायते । सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः । इत्यादिषु यः सन्ध्यभावस्तदसामर्थ्यं कवेः । यत्र खल्वतिदीर्घे वाक्ये विशेषणपरम्पराऽतिमहती निबध्यते कादम्बर्यादिषु वाणादिभिर्महाकविभिस्तत्र प्रतिविशेषणान्तं विरामेच्छया सन्धेरभावो नापवदतेऽस्मदुक्तम् । स्वाभाविकीयं विरामेच्छा वाक्यविश्रान्त्यामसत्यामपि श्रान्तिहेतुका विस्पष्टप्रतिपत्त्यर्था चेति न दुर्विभावं सुधीभिः । अयमेव निरुक्तायाः कारिकाया अवकाशः ।

अतश्च सन्धिर्नियतो वाक्ये । लोके वाक्यैरेव व्यवहारो न तु पदैः । वाक्यैरेव विवक्षितं ब्रूमो न जातु पदैः । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चनेति वैयाकरणकृतान्तः । तेन वाक्येऽसन्त्येव पदान्यपोद्ध्रियन्ते काल्पनिकानि । एवं व्यवस्थिते मध्येवाक्यं विराम इति कथाऽस्तमेति ।

संस्कृते तत्तद्धातुरूपाणि तिङन्तानि न सुगमानि भवन्तीति तत्परीहारेण कृत्प्रयोगेण च तत्स्थानापन्नेन सरलत्वमीप्सन्ति संस्कृतं प्रचिचारयिषन्तः । तदपि परीक्ष्यम् । इदमत्र विस्मरन्ति ते—कृता हि सिद्धावस्थापन्नो भाव उच्यते, तिङा च साध्यावस्थापन्न इति । उक्तं च प्रामाणिकैः—कृदभिहितो भावो द्रव्यवत्प्रकाशत इति । तेन यमर्थं 'स ग्राममगच्छत्', 'स ग्राममगमद्' इत्यादिनाऽऽह, न तमेव 'स ग्रामं गतोस्ति', 'स ग्रामं गतवान' स्तीत्यादिना वक्तुमीष्टे । पूर्वत्र गतिः प्राधान्येन प्रतीयते साध्यरूपाऽनपवृक्ता । उत्तरत्र च सिद्धरूपाऽपवृक्ता चेति विवेकः । पूर्वत्रासौ प्राप्तग्रामः सम्प्रतीति प्रतीतिः । अपरत्र स ग्राममुद्दिश्य गमनपरोऽभूदिति प्रतिपत्तिः । एवं सत्यर्थभेदे तिङन्तं गमिमप्रयुज्य कृदन्तेन तेन न शक्यं निर्वोढुमिति व्यक्तं विदुषाम् । एवं स्वपिमि, क्षुध्यामि, श्राम्यामीत्यादीनां प्रसङ्गे सुप्तोस्मि, क्षुधितोस्मि, श्रान्तोस्मीत्यादि न शक्यते प्रयोक्तुम् । तदर्थस्यावाचकत्वात् ।

केचिदाहुस्तत्तद्धातुप्रकृतिकानि करोतेः कर्मत्वमापाद्यापि शक्यते स सोर्थो निर्वक्तुं

कष्टानि तिङन्तरूपाणि च परिहर्तुम्। यथा स्नाति, बिभेति, सेवते, अर्जयति, लज्जते, द्रक्ष्यामीत्यादीनां स्थाने स्नानं करोति भयं करोति, सेवां करोति, अर्जनं करोति, लज्जां करोति, दर्शनं करिष्यामीत्यादि शक्यं प्रयोक्तुमिति। बाढं शक्यम्। परं क्वचिदर्थान्तरप्रतीतिप्रसङ्गोऽपि जायतेऽनिष्टः। भयं करोतीत्यस्य भयं जनयतीति प्रायोऽर्थः। भयङ्करमित्यत्र करोतेर्जननेऽभूतप्रादुर्भावे दर्शनात्। एवं लज्जां करोतीत्यस्यापि लज्जयति व्रीडयतीति प्रायिकोर्थः। तथापि यदि चारुत्वं बन्धस्य नाद्रियते, लाघवं वा न गण्यते र्तांह विस्रब्धमत्र ऋजुनि वर्त्मनि प्रवर्ततां लोकः। न वयं विरुन्ध्मः, न वाऽभ्यसूयामः।

इष्टं नः सरलीकरणमित्यधस्तादवोचाम। तेन तदुपायं नः सम्मतं निर्दिशामः। कृभ्वस्तीनां प्रयोगस्तावद् दुष्परिहर इति प्रतिपन्नप्रायम्। भौवादिका धातवो हि सुग्रहाः प्रायेण प्रतीततमाश्च, तेन तदुपेक्षायां बीजं न पश्याम इति ते व्यवहार्याः प्रायेण। तत्रापि यदि केचन दुःस्मरा दुर्ग्रहाः प्रयोगमनवतीर्णा वा सन्ति कामं ते परिहर्तव्याः। एवं गणान्तरेषु पठिता याति पुष्यति चिनोति जानाति प्रभृतयः प्रचुरं प्रयुज्यमाना अपि समादर्तव्याः। प्रयत्नो हि फलाद् व्यतिरिच्येतेति कथङ्कारं युज्येत। तेन भौवादिकेष्वपि कांश्चिदेवोपादाय शक्यः स सोर्थो निवक्तुम् आत्मा च क्लेशेन विना कर्तुम्। कथमिति चेदुच्यते—उपसर्गसहचरिता अल्पा एव धातवो बहूनर्थान्ब्रुवन्तीति यद्युपसर्गप्रयोगेऽवधीयेत तदा सा सा विवक्षा पूर्येत, तत्तद्धातुस्मरणजः क्लेशश्च हीयेत। परिगतोपसर्गार्थच्छात्रो नात्मानं कदर्थयेत्परःशततिङन्तरूपावलिस्मरणेनोद्वेजकेन। व्याख्यातचरोयमर्थोस्माभिरनुवादकलायामिति नेह वितन्यते। अयं चापरो गुण उपसर्गयोगस्य स्थाने कृतस्य। सुभगंकरणा उपसर्गा इति सौभाग्यमपि किमपि निषिञ्चन्ति वाचि।

अपरे मन्यन्ते शास्त्रेण यत्पदद्वैविध्यं परस्मैपदमात्मनेपदं चेति प्रथितमुपदिष्टं तत्रात्मनेपदं शक्यं परित्यक्तुम्। परस्मैपदेनैव सर्वत्र व्यवहारसिद्धेः। काव्यनाटकादिषु बहुत्र साङ्कर्यदृष्टेश्चेति। तत्र ब्रूमः सत्यं पूर्वैः सूरिभिरनेकत्र पदयोरेतयोः प्रविवेकेण प्रयोगो नाकारि तथापि नैतावताऽऽत्मनेपदपरित्याग उपपत्तिमान्भवति। कामं बहुत्र वाक्यरचनायां परस्मैपदेनैव निर्वक्ष्यति कार्यं परं सन्ति केचनात्मनेपदप्रदेशाः स्वा यत्र तदन्तरा कर्तृगामिफलता न शक्याऽभिव्यङ्क्तुम्। इष्यते च। यथात्र सन्दर्भे-यः परः स द्वेष्यो भवति। अहमन्यमाहन्यामित्युद्यन्नेव विलीयते भावः। कथङ्करमात्मानमाघ्नीयेति। यथा वात्र यद्यहं परं दुर्गतमुद्धरामि, आत्मानमेवोद्धरे। परं चेदनुगृह्णामि, आत्मानमेवानुगृह्णे। परस्य साचिव्यं चेत्करोमि, आत्मन एव साचिव्यं कुर्वे इति। भिक्षाका याचन्त इत्येव युज्यते वक्तुं न तु भिक्षाका याचन्तीति। विपरीतार्थगतेः। परोपकारप्रियाः केचित्साधवः कूपतटाकादिनिर्मित्सया धनं याचन्ति लोकमित्येव वक्तुमुचितम्। आत्मनेपदप्रयोगस्तु विरुद्धमतिकृदित्यनवसरगृहीतः। तेनोभयोः पदयोर्यथायथं प्रदेशा इत्यात्मनेपदस्यात्यन्ताय प्रहाणं न संभवीति क्वाचित्कोऽस्य प्रयोग एषणीय एव। वाग्घि परत्र बोधसंक्रान्तये प्रयुज्यते सा चेदयथार्थं बोधयेन्नार्थोऽनया।

ये चाद्यत्वे सरलत्वकामाः संस्कृतेनार्थनिबन्धने हिन्द्याः सरणिमनुसरन्ति ते नालं विदुः संस्कृतस्यात्मानमेव हिंस्मः, स्वरूपमेवास्य क्षिणुम इति। अस्ति खलु कश्चिच्छिष्ट-

जुष्टः प्रकारः संस्कृते यो यत्नेन गवेषणीयो वेदनीयो रक्षणीयश्च। शास्त्रकारो ह्
प्रथमान्तेन सामानाधिकरण्ये लटः शतृशानचौ शास्ति विकल्पेन। परं हिन्दीमनुकुर्व
वर्तमानतायां च व्यामुग्धाः प्रवृत्तक्रियाऽचिख्यासया यत्र तत्र शतृशानचावादेशौ कुर्व
न चाप्रथमान्तेन सामानाधिकरण्ये तौ स्यातामिति शिष्टिमनुरुध्यन्ते तेन च व्यवहा
मुच्चरन्ते। तस्मात्कटं कुरुते। देवो वर्षति। रावणो हन्यते। ते भुञ्जते। वयं विचा
याम इत्यादीनां स्थाने कटं कुर्वाणोस्ति। देवो वर्षन्नस्ति। रावणो हन्यमानोस्ति।
भुञ्जानाः सन्ति। वयं विचारयन्तः स्म इत्यादि व्यवहाराननुपातीति पराकरणीयम्
प्रारब्धोऽपरिसमाप्तश्च वर्तमानः काल इति पचतीत्युक्ते योर्थो गम्यते स एव पचन्नस्त
त्यनेन। तेन नार्थः कृद्वृत्तिसमाश्रयेण, केवलं व्यवहारोऽतीयते। प्रथमान्तेन सामानाि
करण्ये क्वचिदेव शतृशानचाविति वृत्तिकारः। यथा—उद्यास्यन्वा अरेऽहमस्मात्स्थाना
स्मीति मैत्रेयीं प्रति भगवतो याज्ञवल्क्यस्योक्तिः। क्वाचित्कत्वं च नालं लोकव्यवहारनि
बन्धनताया इति न वेदनीया विचक्षणाः।

अन्यत्रापि हिन्दीमनुरुन्धाना इदानीन्तनाः संस्कृतज्ञा व्यवहारमतिपतन्ि
तत्प्रसङ्गादुच्यते। यद्यपि प्रायाद्वाक्ये नियतः पदानां क्रमः कश्चिन्नास्ति, पात्रमाहर, आह
पात्रम् इत्युभयथा प्रामाणिकप्रयोगदर्शनात्तथाप्युपाख्यानोपक्रमः प्रायेणास्तिना क्रियते-
अस्त्ययोध्यायां चूडामणि र्नाम क्षत्रिय इति। क्रियान्तरेण तु वाक्योपक्रमो नानुज्ञायते
अद्यत्वे तु अध्यूषतुः कमपि ग्रामं कौचित् प्रतिवेशिनौ विप्राविस्त्येवमप्युपाख्यानमुपक्रमन्ते
इतरत्रापि वाक्ये पदाभिसम्बन्धे याथाकामी नेष्टा शिष्टानाम्। वाक्ये षष्ठ्यन
विशेषणं विशेषणान्तरेणाव्यवहितं विशेष्यात्पूर्वं निपततीति शिष्टव्यवहारः। एकातप
जगतः प्रभुत्वम् इति। न ह्यत्र जगत एकातपत्रं प्रभुत्वमित्येवं क्रमः शक
विपर्यासयितुम्। न ब्रूमो वृत्तभङ्गभयादिति। किन्तर्हि व्यवहारातिक्रमादिति
एवं हि व्युत्क्रमेणोच्यमाने व्यवहारोतिक्रान्तो भवतीति। एवं सर्वगुणसम्पन्न
स्तस्य सुतः कस्य स्पृहां न जनयति। सर्वैर्योषितां गुणैरलंकृतेयं वरवर्णिनी कस्
धन्यस्य दारा इत्यत्र तस्य सर्वगुणसम्पन्नः सुतः, योषितां सर्वैर्गुणैरलङ्कृतेत्येव-
मानुपूर्वीकः पदन्यासो न पार्यते कर्तुम्। स चेत्क्रियते हिन्दीवाग्व्यवहारानुसार एव तत्र
निबन्धनम्। अयमेवेष्टः पदक्रमः संस्कृत इत्यत्र किं मानमिति चेत्। समासक्रम एव तत्र
मानमिति गृहाण। 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने' इति नानार्थवर्गेऽमरः। तत्र
वणिजो धनं वणिग्धनमिति पूर्वं षष्ठीसमासः। ततः किंलक्षणं तदित्याकाङ्क्षायां मूलं च
तद् वणिग्धनं चेति मूलवणिग्धनमिति विशेषणसमासः। चेच्छब्दो वाक्यादौ न प्रयुज्यते
परमद्यत्वे चेत्कृष्णं नंस्यसि स्वर्गं यास्यसीत्येवं बहवः प्रयुञ्जते। नैतदेव। पूर्ववाक्ये
चेच्छब्दप्रयोग उत्तरवाक्ये यदा तर्हीति वापि व्यवहरन्ते। अयमपि व्यवहारातिक्रमः।
बह्वत्र वक्तव्यम्। विस्तरभिया तूदास्यते। इदमेव व्याहृत्य पर्यवसाययामो वाचम् इष्यतां
सारल्यं यत्यतां च तदर्थं स्मर्यतां च न हि सारल्यं नाम पर्याकुलीभावपर्याय इत्यों शम्॥